# श्रीशङ्कराचार्यपदावलम्बसुवर्णमालास्तुती

{॥ श्रीशङ्कराचार्यपदावलम्बसुवर्णमालास्तुती ॥}

ओङ्कारपङ्कजमधुव्रत वेदशीर्ष-

कञ्जातबालदिननाथ कृपासमुद्र ।

वृन्दारकेन्द्रपदतौच्छ्यमनःप्रदायिन्

श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ १॥

नत्वा पदाम्बुजनियुग्ममहो यदीयं

वाचस्पतित्वमधिगच्छति जन्ममूकः ।

स त्वं कृपार्णव सरोरुहपत्रनेत्र

श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ २॥

मत्तो मनःप्रभव एष पुरा यदीय-

नेत्राग्निनाप तरसा भसितस्वभावम् ।

स त्वं विरक्तिमचलां प्रवितीर्य मह्यं

श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ ३॥

शङ्कानिवारणपटो प्रणतव्रजस्य

यं कालकाल इति कुंभभवो जगाद ।

स त्वं वितीर्य परमायुरभीष्टपूगं

श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ ४॥

कन्येव रूपगुणशालिनमादरेण
मर्त्यं प्रमोदभरतः स्वयमेव मुक्तिः ।
यद्वाक्सुधाप्रणयिनं वृणुते हि स त्वं
श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ ५॥

राजाधिराजपदवीं तरसा प्रयाति
यत्पादपङ्कजयुगं सकृदेव नत्वा ।
दीनाग्रयाय्यपि विना कमपि प्रयत्नं
श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ ६॥

यत्यग्रयायिजनतावनबद्धदीक्ष
तत्त्वं प्रबोध्य तरसा बहुलैः स्वकीयैः ।
ग्रन्थैश्च पूर्णकरुणाभरितैः कटाक्षैः
श्रीशङ्करार्य मम देहि पदावलम्बम् ॥ ७॥

स्तोत्रं त्वदङ्घ्रिकमलालितमानसेन
सूक्तं पठेद्य इह भक्तियुतान्तरङ्गः ।
पात्रं भवेत्स खलु सर्वसुखस्य सत्यं
न द्वापरोऽत्र विषये मनसापि कार्यः ॥ ८॥

इति श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिभिः विरचितम्
शङ्कराचार्यपदावलम्बसुवर्णमालास्तुतिः सम्पूर्णं ॥

